ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ॥ यःस्मरेत् पुण्डरीकाक्षं स बाह्याभ्यऽऽन्तरः शुचिः ॥ ॐ पुण्डरी काक्षः पुनातु इत्युक्त्वा

ध्यानम्

रक्तश्वेतहिरण्यनीलधवलै-र्युक्तां त्रिनेत्रोज्ज्वलां ,
रक्तां रक्तनवस्रजं मणिगणै-र्युक्तां कुमारीमिमाम् ।
गायत्रीं कमलासनां करतल-व्यानद्धकुंडांबुजां ,
पद्माक्षीं च वरस्रजं च दधतीं - हंसाधिरूढां भजे ॥१॥

नारद उवाच ॥

भगवन् सर्वधर्मज्ञ सर्वशास्त्रविशारद ।
श्रुतिस्मृतिपुराणानां रहस्यं त्वन्मुखाच्श्रुतम् ॥१॥
सर्वपापहरं देव येन विद्या प्रवर्तते ।
केन वा ब्रह्मविज्ञानं किं नु वा मोक्षसाधनम् ॥२॥
ब्राह्मणानां गतिः केन केन वा मृत्युनाशनम् ।
ऐहिकामुष्मिकफलं केन वा पद्मलोचन ॥३॥
वक्तुमर्हस्यशेषेण सर्वं निखिल मादितः ।

श्रीनारायण उवाच

साधु साधु महाप्राज्ञ सम्यक् पृष्टं त्वयाऽनघ ॥४॥
श्रुणु वक्षामि यत्नेन गायत्र्यष्टसहस्रकम् ।
नाम्नां शुभानां दिब्यानां सर्वपापविनाशनम् ॥५॥
सृष्टयादौ यद्भगवता पूर्वं प्रोक्तं ब्रवीमि ते ।
अष्टोत्तरसहस्रस्य ऋषिर्ब्रह्मा प्रकिर्तितः ॥६॥
छन्दोऽनुष्टुप् तथा देवी गायत्री देवता स्मृता ।



हलो बीजानि तस्यैव स्वराः शक्तय ईरिताः ॥७॥
अंगन्यासकरन्यासा-वुच्येते मातृकाक्षरैः ।
अथ ध्यानं प्रवक्ष्यामि साधकानां हिताय वै ॥८॥

गायत्रीसहस्रनाम

अचिंत्यलक्षणाव्यक्ता- प्यर्थमातृमहेश्वरी ।
अमृतार्णवमध्यस्था- प्यजिता चापराजिता ॥१॥
अणिमादिगुणाधारा- प्यर्कमण्डलसंस्थिता ।
अजराजापराधर्मा अक्षसूत्रधराधरा ॥२॥
अकारादिक्षकारांता- प्यरिषड्वर्गभेदिनि ।
अंजनाद्रिप्रतीकाशा- प्यञ्जनाद्रिनिवाशिनी ॥३॥
अदितिश्चाजपाविद्या- प्यरविंदनिभेक्षणा ।
अंतर्बहिः स्थिताविद्या- ध्वंसिनी चांतरात्मिका ॥४॥
अजा चाजमुखावासा- प्यरविंदनिभानना ।
अर्धमात्रार्थदानज्ञा- प्यरिमंडलमर्दिनी ॥५॥
असुरघ्नी ह्यमावास्या- प्यलक्ष्मीघ्नन्त्यजार्चिता ।
आदिलक्ष्मीश्चादिशक्ति- राकृतिश्चायतानना ॥६।
आदित्यपदवीचारा- प्यादित्यपरिसेविता ।
आचार्यावर्तनाचारा- प्यादिमूर्तिनीवासिनी ॥७॥
आग्नेयी चामरी चाद्या चारध्या चासनस्थिता ।
आधारनिलयाधारा चाकाशांतनिवासिनी ॥८॥
आद्याक्षरसमायुक्ता चांतराकाशरूपिणी ।
आदित्यमंडलगता चांतरध्वांतनाशिनी ॥९॥

इंदिरा चेष्टदा चेष्टाः चेंदीवरनिभेक्षणा ।
इरावती चेंद्रपदा चेंद्राणी चेन्दुरूपिणी ॥१०॥
इक्षुकोदंडसंयुक्ता चेषुसंधानकारिणी ।
इंद्रनीलसमाकारा चेडापिंगलरूपिणी ॥११॥
इन्द्राक्षी चेश्वरी देवी चेहात्रयविवर्जिता ।
उमा चोषा ह्युडुनिभा उर्वारुकफलानना ॥१२॥
उडुप्रभा चोडुमती ह्युडुपा ह्युडुमध्यगा ।
ऊर्ध्वा चाप्यूर्ध्वकेशी चा-प्यूर्ध्याधोगतिभेदिनी ॥१३॥
ऊर्ध्वबाहुप्रिया चोर्मि-मालावाग्ग्रंथदायिनी ।
ऋतं चर्षिर्ऋतुमति ऋषिदेवनमस्कृता ॥१४॥
ऋग्वेदा ऋणहर्त्री च ऋषिमंडलचारिणी ।
ऋद्धिदा ऋजुमार्गस्था ऋजुधर्मा ऋतुप्रदा ॥१५॥
ऋग्वेदनिलया ऋज्वी लुप्तधर्मप्रवर्तिनी ।
लूतारिवरसंभूता लूतादिविषहारिणी ॥१६॥
एकाक्षरा चैकमात्रा चैका चैकैकनिष्ठिता ।
ऐंद्री ह्यैरावतारूढा चैहिकामुस्मिकप्रदा ॥१७॥
ओंकार ह्योषधी चोता चोतप्रोतनिवासिनी ।
और्वा ह्यौषधसंपन्ना औपासनफलप्रदा ॥१८॥
अंडमध्यस्थिता देवि चाः कारमनुरूपिणी ।
कात्यायनी कालरात्रिः कामाक्षी कामसुन्दरी ॥१९॥
कमला कामिनी कांता कामदा कालकंठिनी ।
करिकुंभस्तनभरा करवीरसुवासिनी ॥२०॥



कल्याणी कुंडलवती कुरुक्षेत्रनिवासिनी ।
कुरुविंददलाकारा कुण्डली कुमुदालया ॥२१॥
कालजिह्वा करालास्या कालिका कालरूपिणी ।
कमनीयगुणा कांतिः कलाधारा कुमुद्वती ॥२२॥
कौशिकी कमलाकारा कामचारप्रभंजिनी ।
कौमारी करूणापांगि ककुबंता करिप्रिया ॥२३॥
केसरी केशबनुता कदंबकुसुमप्रिया ।
कालिंदी कालिका कांची कलशोद्भवसंस्तुता ॥२४॥
काममाता ऋतुमति कामरूपा कृपावती ।
कुमारी कुण्डनिलया किराती कीरवाहना ॥२५॥
कैकेयी कोकिलालापा केतकी कुसुमप्रिया ।
कमंडलुधरा काली कर्मनिर्मूलकारिणी ॥२६॥
कलहंसगति कक्षा कृतकौतुकमंगला ।
कस्तूरीतिलका कम्प्रा करींद्रगमना कुहूः ॥२७॥
कर्पूरलेपना कृष्णा कपिला कुहराश्रया ।
कूटस्था कुधरा कम्रा कुक्षिस्थाखिलविष्टपा ॥२८॥
खड्गखेटकरा खर्वा खेचरी खगवाहना ।
खट्वांगधारिणी ख्याता खगराजोपरिस्थिता ॥२९॥
खलघ्नी खंडितजरा खंडाख्यानप्रदायिनी ।
खण्डेन्दुतिलका गङ्गा गणेशगुहपूजिता ॥३०॥
गायत्री गोमति गीता गांधारी गानलोलुपा ।
गौतमी गामिनी गाधा गंधर्वाप्सरसेविता ॥३१॥

गोविंदचरणाक्रांता गुणत्रय विभाविता ।
गंधर्वी गह्वरी गोत्रा गिरीशा गहना गमी ॥३२॥
गुहावासा गुणवती गुरुपापप्रणाशिनी ।
गुर्वी गुणवती गुह्या गोप्तव्या गुणदायिनी ॥३३॥
गिरिजा गुह्यमातंगी गरुडध्वजवल्लभा ।
गर्वापहारिणी गोदा गोकुलस्था गदाधरा ॥३४॥
गोकर्णनिलयासक्ता गुह्यमंडलवर्तिनी ।
घर्मदा घनदा घण्टा घोरदानवमर्दिनी ॥३५॥
घृणिमन्त्रमयी घोषा घनसम्पातदायिनी ।
घण्टारवप्रिया घ्राणा घृणिसंतुष्टकारिणी ॥३६॥
घनारिमंडला घूर्णा घृताची घनवेगिनी ।
ज्ञानधातुमयी चर्चा चर्चिता चारुहासिनी ॥३७॥
चटुला चंडिका चित्रा चित्रमाल्यविभूषिता ।
चतुर्भुजा चारुदंता चातुरी चरितप्रदा ॥३८॥
चूलिका चित्रवस्त्रांता चन्द्रमः कर्णकुण्डला ।
चन्द्रहासा चारुदात्री चकोरी चन्द्रहासिनी ॥३९॥
चंद्रिका चन्द्रधात्री च चौरी चौरा च चंडिका ।
चंचद्वाग्वादिनी चन्द्रचूडा चोरविनाशिनी ॥४०॥
चारूचन्दनलिप्तांगी चञ्चच्चामरवीजिता ।
चारूमध्या चारुगति-श्चंदिला चन्द्ररूपिणी ॥४१॥
चारुहोमप्रिया चार्वाचरिता चक्रबाहुका ।
चन्द्रमंडलमध्यस्था चन्द्रमण्डलदर्पणा ॥४२॥



चक्रवाकस्तनी चेष्टा चित्रा चारुविलासिनी ।
चित्स्वरूपा चन्द्रवती चन्द्रमाश्चंदनप्रिया ॥४३॥
चोदयित्री चिरप्रज्ञा चातका चारुहेतुकी ।
छत्रयाता छत्रधरा छाया छन्दः परिच्छदा ॥४४॥
छायादेवीछिद्रनखा छन्नेन्द्रियविसर्पिणी ।
छन्दोऽनष्टुप्प्रतिष्ठान्ता छिद्रोपद्रवभेदिनी ॥४५॥
छेदा छत्रेश्वरी छिन्ना छुरिका छेदनप्रिया ।
जननी जन्मरहिता जातवेदा जगन्मयी ॥४६॥
जाह्नवी जटिला जेत्री जरामरणवर्जिता ।
जंबूद्वीपवती ज्वाला जयंती जलशालिनी ॥४७॥
जितेन्द्रिया जितक्रोधा जितामित्रा जगत्पृया ।
जातरूपमयी जिह्वा जानकी जगती जरा ॥४८॥
जनित्री जह्नुतनया जगत्त्रयहितैषिणी ।
ज्वालामुखी जपवती ज्वरघ्नी जितविष्टपा ॥४९॥
जिताक्रांतमयी ज्वाला जाग्रती ज्वरदेवता ।
ज्वलंती जलदा ज्येष्ठा ज्याघोषास्फोटदिङ्मुखी ॥५०।
जम्भिनी जृम्भणा जृम्भा ज्वलन्माणिक्यकुंडला ।
झिंझिका झणनिर्घोषा झंझामारुतवेगिनी ॥५१॥
झल्लरीवाद्यकुशला ञरूपा ञभुजा स्मृता ।
टङ्कबाणसमायुक्ता टङ्किनी टङ्कभेदिनी ॥५२॥
टङ्कीगणकृताघोषा टङ्कनीयमहोरसा ।
टङ्कारकारिणी देवी ठठशब्दनिनादिनी ॥५३॥

डामरी डाकिनी डिंभा डुण्डुमारैकनिर्जिता ।
डामरीतंत्रमार्गस्था डमड्डमरूनादिनी ॥५४॥
डिण्डीरवसहा डिम्भ-लसत्क्रीडापरायणा ।
ढुण्ढिविघ्नेशजननी ढक्कहस्ता ढिलिव्रजा ॥५५॥
नित्यज्ञाना निरूपमा निर्गुणा नर्मदा नदी ।
त्रिगुणा त्रिपदा तंत्री तुलसीतरुणातरुः ॥५६॥
त्रिविक्रमपदाक्रांता तुरीयपदगामिनी ।
तरुणादित्यसंकाशा तामसि तुहिना तुरा ॥५७॥
त्रीकालज्ञानसंपन्ना त्रिवेणी च त्रिलोचना ।
त्रिशक्तिस्त्रिपुरा तुङ्गा तुरङ्गवदना तथा ॥५८॥
तिमिङ्गिलगिला तीव्रा त्रिस्रोता तामसादिनी ।
तन्त्रमन्त्रविशेषज्ञा तनुमध्या त्रीविष्टपा ॥५९॥
त्रिसन्ध्या त्रिस्तनी तोषा-संस्था तालप्रतापनी ।
ताटंकिनी तुषाराभा तुहिनाचलवासिनी ॥६०॥
तन्तुजालसमायुक्ता तारहारावलिप्रिया ।
तिलहोमप्रिया तीर्था तमालकुसुमाकृतिः ॥६१॥
तारका त्रियुता तन्वी त्रिशङ्कुपरिवारिता ।
तलोदरी तिलाभूषा ताटङ्कप्रियवाहिनी ॥६२॥
त्रिजटा तित्तिरी तृष्णा त्रिविधा तरुणाकृतिः ।
तप्तकाञ्चनसंकाशा तप्तकाञ्चनभूषणा ॥६३॥
त्रैयंबका त्रिवर्गा च त्रिकालज्ञानदायिनी ।
तर्पणा तृप्तिदा तृप्ता तामशी तुंबुरुस्तुता ॥६४॥



तार्क्ष्यस्था त्रिगुणाकारा त्रिभङ्गी तनुवल्लरिः ।
थात्कारी थारवा थांता दोहिनी दीनवत्सला ॥६५॥
दानवांतकरी दुर्गा दुर्गासुरनिबर्हिणी ।
देवरीतिर्दिवारात्रि-द्रौपदी दुंदुभिस्वना ॥६६॥
देवयानी दुरावासा दारिद्र्योद्भेदिनी दिवा ।
दामोदरप्रिया दीप्ता दिग्वासा दिग्विमोहिनी ॥६७॥
दण्डकारण्यनिलयाः दण्डिनी देवपूजिता ।
देववन्द्या दिविषदा द्वेषिणी दानवाकृतिः ॥६८॥
दिनानाथस्तुता दीक्षा दैवतादिस्वरूपिणी ।
धात्री धनुर्धरा धेनु-र्धारिणी धर्मचारिणी ॥६९॥
धरंधरा धराधारा धनदा धान्यदोहिनी ।
धर्मशीला धनाध्यक्षा धर्मवेदविशारदा ॥७०॥
धृतिर्धन्या धृतपदाः धर्मराजप्रिया ध्रुवा ।
धूमावती धूमकेशीः धर्मशास्त्रप्रकाशिनी ॥७१॥
नंदा नंदप्रिया निद्रा नृनुता नंदनात्मिका ।
नर्मदा नलिनी नीलाः नीलकण्ठसमाश्रया ॥७२॥
नारायणप्रिया नित्या निर्मला निर्गुणा निधिः ।
निराधारा निरुपमाः नित्यशुद्धा निरंजना ॥७३॥
नादविन्दुकलातीताः नादविन्दुकलात्मिका ।
नृसिंहिनी नगधरा नृपनागविभूषिता ॥७४॥
नरकक्लेशशमनी नारायणपदोद्भवा ।
निरवद्या निराकारा नारदप्रियकारिणी ॥७५॥

नानाज्योतिः समाख्याता निधिदा निर्मलात्मिका ।
नवसूत्रधरा नीति-र्निरुपद्रवकारिणी ॥७६॥
नंदजा नवरत्नाढ्या नैमिषारण्यवासिनी ।
नवनीतिप्रिया नारी नीलजीमूतनिस्वना ॥७७॥
निमेषिणी नदीरूया नीलग्रीवा निशीश्वरी ।
नामावलिर्निशुंभघ्नी नागलोकनिवासिनी ॥७८॥
नवजांबूनदप्रख्या नागलोकाधिदेवता ।
नूपुराक्रांतचरणा नरचित्तप्रमोदिनी ॥७९॥
निमग्नारक्तनयना निर्घातसमनिश्वना ।
नन्दनोद्यानिलया निर्व्यूहोपरिचारिणी ॥८०॥
पार्वती परमोदारा परब्रह्मात्मिका परा ।
पंचकोशविनिर्मुक्ता पंचपातकनाशिनी ॥८१॥
परचित्तविधानज्ञा पंचिका पंचरूपिणी ।
पूर्णिमा परमा प्रीतिः परतेजः प्रकाशिनी ॥८२॥
पुराणी पौरूषी पुण्या पुण्डरीकनिभेक्षणा ।
पातालतलनिर्मग्ना प्रीता प्रीतिविवर्धिनी ॥८३॥
पावनी पादसहिता पेशला पवनाशिनी ।
प्रजापतिः परीश्रांता पर्वतस्तनमंडला ॥८४॥
पद्मप्रिया पद्मसंस्था पद्माक्षी पद्मसंभवा ।
पद्मपत्रा पद्मपदा पद्मिनी प्रियभाषिणी ॥८५॥
पशुपाशविनिर्मुक्ता पुरंध्री पुरवासिनी ।
पुष्कला पुरुषा पर्वा पारिजातसुमप्रिया ॥८६॥



पतिव्रता पवित्रांगी पुष्पहासपरायणा ।
प्रज्ञावतीसुता पौत्री पुत्रपूज्या पयस्विनी ॥८७॥
पट्टिपाशधरा पङ्क्तिः पितृलोकप्रदायिनी ।
पुराणी पुण्यशीला च प्रणतार्तिविनाशिनी ॥८८॥
प्रद्युम्नजननी पुष्टा पितामहपरिग्रहा ।
पुंडरीकपुरावासा पुंडरीकसमानना ॥८९॥
पृथुजंघा पृथुभुजा पृथुपादा पृथूदरी ।
प्रवालशोभा पिंगाक्षी पीतवासाः प्रचापला ॥९०॥
प्रसवा पुष्टिदा पुण्या प्रतिष्ठा प्रणवागतिः ।
पञ्चवर्णा पञ्चवाणी पञ्चिका पञ्जरस्थिता ॥९१॥
परमाया परज्योतिः परप्रीतिः परागतिः ।
पराकाष्ठा परेशानी पाविनी पावकद्युतिः ॥९२॥
पुण्यभद्रा परिच्छेद्या पुष्पहासा पृथूदरी ।
पीतांगी पीतवसना पीतशय्या पिशाचिनी ॥९३॥
पीतक्रिया पिशाचघ्नी पाटलाक्षी पटुक्रिया ।
पंचभक्षप्रियाचारा पूतनाप्राणघातिनी ॥९४॥
पुन्नागवनमध्यस्था पुण्यतीर्थनिषेविता ।
पंचागी च पराशक्ति परमाल्हादकारिणी ॥९५॥
पुष्पकांडस्थिता पूषा पोषिताखिलविष्टपा ।
पानप्रिया पंचशिखा पन्नगोपरिशायिनी ॥९६॥
पंचमात्रात्मिका पृथ्वी पथिका पृथुदोहिनी ।
पुराणन्यायमीमांसा पाटली पुष्पगंधिनी ॥९७॥

पुण्यप्रजा पारदात्री परमार्गैकगोचरा ।
प्रवालशोभा पूर्णाशा प्रणवा पल्लवोदरी ॥९८॥
फलिनी फलदा फल्गु फूत्कारी फलकाकृतिः ।
फणीद्रभोगशयना फणिमंडलमंडिता ॥९९॥
बालबाला बहुमता बालातपनिभांशुका ॥
बलभद्रप्रिया वंद्या वडवा बुद्धिसंस्तुस्ता ॥१००॥
बंदीदेवी बिलवती बडिशघ्नी बलिप्रिया ।
बांधवी बोधिता बुद्धि-बंधूककुसुमप्रिया ॥१०१॥
बालभानुप्रभाकारा ब्राह्मी ब्राह्मणदेवता ।
बृहस्पतिस्तुता वृंदा वृंदावनविहारिणी ॥१०२॥
बलाकिनी बिलाहारा बिलवासा बहूदका ।
बहुनेत्रा बहुपदा बहुकर्णावतंसिका ॥१०३॥
बहुबाहुयुता बीजरूपिणी बहुरूपिणी ।
बिंदुनादकलातीता बिंदुनादस्वरूपिणी ॥१०४॥
बद्धगोधांगुलित्राणा बदर्याश्रमवासिनी ।
वृंदारका बृहत्स्कंधा बृहती बाणपातिनी ॥१०५॥
बृंदाध्यक्षा बहनुता बनिता बहुबिक्रमा ।
बद्धपद्मासनासिना बिल्वपत्रतलस्थिता ॥१०६॥
बोधिद्रुमनिजावासा बडिस्था बिंदुदर्पणा ।
बाला बाणासनवती वडवानलवेगिनी ॥१०७॥
ब्रह्माण्डबहिरंतः स्था ब्रह्मकंकणसूत्रिणी ।
भवानी भीषणवती भाविनी भयहारिणी ॥१०८॥





भद्रकाली भुजंगाक्षी भारती भारताशया ।
भैरवी भीषणाकारा भूतिदा भूतिमालिनी ॥१०९॥
भामिनी भोगनिरता भद्रदा भूरिविक्रमा ।
भूतवासा भृगुलता भार्गवी भूसुरार्चिता ॥११०॥
भागीरथी भोगवती भवनस्था भिषग्वरा ।
भामिनी भोगिनी भाषा भवानी भूरिदक्षिणा ॥१११॥
भर्गात्मिका भीमवती भवबंधनमोचिनी ।
भजनिया भूतधात्रीरञ्जिता भुवनेस्वरी ॥११२॥
भुजङ्गवलया भीमा भेरुंडा भागधेयिनी ।
माता माया मधुमती मधुजिह्वा मधुप्रिया ॥११३॥
महादेवी महाभागा मालिनी मीनलोचना ।
मायातिता मधुमती मधुमांसा मधुद्रवा ॥११४॥
मानवी मधुसंभुता मिथिलापुरवासिनी ।
मधुकैटभसंहर्त्री मेदिनी मेघमालिनी ॥११५॥
मंदोदरी महामाया मैथिली मसृणप्रिया ।
महालक्ष्मीर्महाकाली महाकन्या महेश्वरी ॥११६॥
माहेन्द्री मेरुतनया मंदारकुसुमार्चिता ।
मञ्जुमञ्जीरचरणा मोक्षदा मञ्जुभाषिणी ॥११७॥
मधुरद्राविणी मुद्रा मलया मलयान्विता ।
मेधा मरकतश्यामा मागधी मेनकात्मजा ॥११८॥
महामारी महावीरा महाश्यामा मनुस्तुता ।
मातृका मिहिराभासा मुकुंदपदविक्रमा ॥११९॥

मूलाधारस्थिता मुग्धा मणिपूरकवासिनी ।
मृगाक्षी महिषारूढा महिषासुरमर्दिनी ॥१२०॥
योगासना योगगम्या योगा यौवनकाश्रया ।
यौवनी युद्धमध्यस्था यमुना युगधारिणी ॥१२१॥
यक्षिणी योगयुक्त च यक्षराजप्रसूतिनी ।
यात्रा यानविधानज्ञा यदुवंशसमुद्भवा ॥१२२॥
यकारादिहकारांता याजुषी यज्ञरूपिणी ।
यामिनी योगनिरता यातुधानभयंकरी ॥१२३॥
रुक्मिणी रमणी रामा रेवती रेणुका रतिः ।
रौद्री रौद्रप्रियाकारा राममाता रतिप्रिया ॥१२४॥
रोहिणी राज्यदा रेवा रमा राजीवलोचना ।
राकेशी रूपसंपन्ना रत्नसिंहासनस्थिता ॥१२५॥
रक्तमाल्यांबरधरा रक्तगंधानुलेपना ।
राजहंससमारूढा रंभा रक्तबलिप्रिया ॥१२६॥
रमणीययुगाधारा राजिताखिलभूतला ।
रुरुचर्मपरीधाना रथिनी रत्नमालिका ॥१२७॥
रोगेशी रोगशमनी राविणी रोमहर्षिणी ।
रामचंद्रपदाक्रांता रावणच्छेदकारिणी ॥१२८॥
रत्नवस्त्रपरिच्छन्ना रथस्था रुक्मभूषणा ।
लज्जाधिदेवता लोला ललिता लिङ्गधारिणी ॥१२९॥
लक्ष्मीर्लोला लुप्तविषा लोकिनी लोकविश्रुता ।
लज्जा लंबोदरी देवी ललना लोकधारिणी ॥१३०



वरदा वन्दिता विद्या वैष्णवी विमलाकृतिः ।
वाराहि विरजा वर्षा वरलक्ष्मीर्विलासिनी ॥१३१॥
विनता व्योममध्यस्था वारिजासनसंस्थिता ।
वारुणी वेणुसंभूता वीतिहोत्रा विरूपिणी ॥१३२॥
वायुमण्डलमध्यस्था विष्णुरूपा विधिप्रिया ।
विष्णुपत्नी विष्णुमती विशालाक्षी वसुन्धरा ॥१३३॥
वामदेवप्रिया वेला वज्रिणी वसुदोहिनी ।
वेदाक्षरपरीतांगी वाजपेयफलप्रदा ॥१३४॥
वासवी वामजननी वैकुण्ठनिलया वरा ।
व्यासप्रिया वर्मधरा वाल्मीकिपरिसेविता ॥१३५॥
शाकंभरी शिवा शांता शरदा शरणागतिः ।
शातोदरी शुभाचारा शुंभासुरविमर्दिनी ॥१३६॥
शोभावती शिवाकारा शंकरार्द्धशरीरिणी ।
शोणा शुभाशया शुभ्रा शिरः संधानकारिणी ॥१३७॥
शरावती शरानन्दा शरज्ज्योत्स्ना शुभानना ।
शरभा शूलिनी शुद्धा शबरी शुकवाहना ॥१३८॥
श्रीमती श्रीधरानंदा श्रवणानंददायिनी ।
शर्वाणी शर्वरीवंद्या षड्भाषा षड्ऋतुप्रिया ॥१३९॥
षडाधारस्थिता देवी षण्मुखप्रियकारिणी ।
षडंगरूपसुमति- सुरासुरनमस्कृता ॥१४०॥
सरस्वती सदाधारा सर्वमंगलकारिणी ।
सामगानप्रिया सूक्ष्मा सावित्री सामसम्भवा ॥१४१॥

सर्वावासा सदानंदा सुस्तनी सागरांबरा ।
सर्वैश्वर्याप्रिया सिद्धिः साधुबंधुपराक्रमा ॥१४२॥
सप्तर्षिमंडलगता सोममंडलवासिनी ।
सर्वज्ञा सांद्रकरुणा समानाधिकवर्जिता ॥१४३॥
सर्वोत्तुङ्गा सङ्गहीना सद्‌गुणा सकलेष्टदा ।
सरघा सूर्यतनया सुकेशी सोमसंहती ॥१४४॥
हिरण्यवर्णा हरिणी ह्रींकारी हंसवाहिनी ।
क्षौमवस्त्रपरीताङ्गी क्षीराबिधतनया क्षमा ॥१४५॥
गायत्री चैव सावित्री पार्वती च सरस्वती ।
वेदगर्भा वरारोहा श्रीगायत्री परांबिका ॥ १४६॥
इति साहस्रकं नाम्नां गायत्र्याश्चैव नारद ।
पुण्यदं सर्वपापघ्नं महासंपत्तिदायकम् ॥१४७॥
एवं नामानि गायत्र्या-स्तोषोत्पत्तिकराणि हि ।
अष्टम्यां च विशषेण पठितव्यं द्विजैः सह ॥१४८॥
जपं कृत्वा होमपूजा ध्यानं कृत्वा विशेषतः ।
यस्मै कस्मै न दातव्यं गायत्र्यास्तु विशेषतः ॥१४९॥
सुभक्ताय सुशिष्याय वक्तव्यं भूसुराय वै ।
भ्रष्टेभ्यः साधकेभ्यश्च बांधवेभ्यो न दर्शयत् ॥१५०॥
यद्‌गृहे लिखितं शास्त्रं भयं तस्य न कस्यचित् ।
चञ्चलापि स्थिरा भूत्वा कमला तत्र तिष्ठति ॥१५१॥
इदं रहस्यं परमं गुह्याद् गुह्यतरं महत् ।
पुण्यप्रदं मनुष्याणां दरिद्राणां निधिप्रदम् ॥१५२॥



मोक्षप्रदं मुमुक्षूणां कामिनां सर्वकामदं ।
रोगाद्वै मुच्यते रोगि बद्धो मुच्येत बन्धनात् ॥१५३
ब्रह्महत्यासुरापान- सुवर्णस्तेयिनो नराः ।
गुरुतल्पगतो वापि पातकान्मुच्यते सकृत् ॥१५४॥
असत्प्रतिग्रहाच्चैवा- भक्ष्यभक्षाद्विशेषतः ।
पाखंडानृत्यमुख्यभ्यः पाठनादेव मुच्यते ॥१५५॥
इदं रहस्यममलं मयोक्तं पद्‌मजोद्‌भव ।
ब्रह्मसायुज्यदं नृणां सत्यं सत्यं न संशय ॥१५६॥

श्री देवीभागवते महापुराणे द्वादशस्कन्धे गायत्रीसहस्रनाम स्तोत्र कथनं षष्ठोऽध्याय

लेखक कृष्ण प्रशाद आचार्य सूर्य विनायक फुन ९८४१२५५२७४॥